समस्तसंस्कृतवाङ्मयम् द्विधा विभज्यते -

(i) वैदिकम् (ii) लौकिकं चेति ।

- वैदिकवाङ्मये संहिता-ब्राह्मण-आरण्यकोपनिषदः अन्तर्भवन्ति ।
- तत्र लौकिकं पुनः आर्षकाव्यम् अनार्षकाव्यमिति द्विधा विभज्यते ।
- आर्षकाव्यानि यथा महाभारतरामायणादीनि ।
- अनार्षकाव्येषु दृश्य-श्रव्यकाव्यादीनि अन्तर्भवन्ति ।

# वैदिकवाङ्मयं पौरुषेयम् वा अपौरुषेयम् वा

- वेदानाम् अपौरुषेय-पौरुषेयविषये दार्शनिकेषु ऐकमत्यं न प्रतिभाति ।
- नैयायिकानां मते वेदः ईश्वरोक्तः पौरुषेयश्च ।
- द्रष्टृभिः ऋषिभिः तत् श्रुतम् । अतः 'श्रुतिः' इत्यपि उच्यते ।
- मीमांसकानां तु वेदाः मुख्यप्रमाणम् अपौरुषेयाश्च ।

contd......

- अपौरुषेयो हि वेदः । अस्मर्यमाणकर्तृकत्वाद् स्वतः प्रमाणत्वात् वेदः अपौरुषेयः ।

- ‘वाचा विरूपनित्यया’ (ऋ.सं.8.8.64.6), ‘अस्य महतोभूतस्य निःश्वसितमेतत्’ (ऋग्-यजुर्सामाः) इत्यादि श्रुतिप्रतिपादितदिशा निःश्वसितत्वाभिधानेन अर्थानुसन्धानपूर्वकम् अनुच्चरितत्वाद् वेदस्य ईश्वरप्रणीतत्वं प्रतिपद्यते ।

contd......

- अर्थं ज्ञात्वा वाक्यप्रणयनं भवतीति कृत्वा स्वोत्प्रेक्षाविषयार्थाभिसन्धि-पूर्वकोच्चारणविषयत्वं पौरुषेयत्वम् अन्वाख्यातम् ।
- तद् हि वेदे नास्तीत्यतो वेदस्यापौरुषेयत्वं प्रतिभाति ।
- स्वसजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वम् । तथाविध-उच्चारण-सापेक्षोच्चारणविषयत्वेन तावद् वेदस्य अपौरुषेयत्वं प्रव्यक्तं भवति ।

# ऋषयः मन्त्रद्रष्टारः

- अत्र 'ऋषयो मन्त्रद्रष्टारः' इत्यर्थमाश्रित्य ऋषयः कवय इत्युच्यन्ते ।
- तैः तत्त्वदर्शिभिः मन्त्रेषु यानि कर्माणि दृष्टानि, तान्येव वेदत्रय्यां सन्निहितानि ।
- तत्त्वार्थदर्शित्वम्, ऋषित्वं, कवित्वं च परस्परसम्बद्धमेव इति संलक्ष्यते ।
- यत्र दिव्यम् अलौकिकं प्रतिभामूलकं कल्पनाजन्यं वा ज्ञानं संलक्ष्यते तत्र कवित्वं स्वीक्रियते ।

# वेदविभागः

- आदौ सः एकरूप एवासीत् ।
- अनन्तरं द्वापरयुगान्ते महर्षिर्वेदव्यासः वेदस्य ऋग्यजुस्सामाथर्वरूपैः चतुर्धा व्यभजत् ।
- पुनः तेन स्वशिष्यवराश्चत्वारः पैलवैशम्पायनजैमिनिसुमन्तवः क्रमशः समुपादिश्यन्त ।

Contd.....

मन्त्रद्रष्टृभिः महर्षिभिः वेदानां चत्वारो विभागाः कृताः ।

मन्त्रसंहिता, ब्राह्मणम्, आरण्यक-उपनिषदश्चेति ।

Contd.....

# मन्त्रसंहिता

इयं तावत् मन्त्रसमुच्चयात्मिका, महत्परिणामा, कर्मोपासना-प्रतिपादनपरा च वर्तते ।

Contd.....

# ब्राह्मणम्

- संहितामन्त्राणां प्रव्यक्ततया वास्तविकार्थप्रतिपादकं व्याख्यानं, विवेचनञ्चास्मिन् सन्दृश्यते ।
- श्रौतयज्ञादिषु वैदिकमन्त्राणां विनियोगविधिः, तद्विषयकञ्च विवरणं एषु ग्रन्थेषु समुपलभ्यते ।

Contd.....

# आरण्यकानि

- अरण्ये पठितुं विहिता वेदविभागा आरण्यकानि ।
- इमानि ब्राह्मणग्रन्थाङ्गभूतानि, तत्परिशिष्टरूपाणि वा समुपलभ्यन्ते ।
- यथा - ऐतरेय-शाङ्खायन-बृहदारण्यक-तैत्तिरीय-इत्यादीनि ।

# उपनिषदः

- आरण्यकान्तर्भूता उपनिषदस्तु आचार्यगुरुसद्मनि वा अध्येतुं योग्या भवन्ति ।
- एतासु प्राधान्येन तत्वज्ञानोपासनाविध्यादिकं, सरहस्यं परिसूक्ष्मतया प्रतिपादितमस्ति ।
- वेदविभागस्य ज्ञानकाण्डत्वं, रहस्यत्वञ्चावगम्यते ।

Contd.....



वेदाः
ऋग्वेद्
यजुर्वेद्
सामवेद्
अथर्ववेद्
ऐतरेय
शुक्ल
कृष्ण
छांदोग्य
केन
मांडुक्य
मुंडक
प्रश्न
ईश
बृहदारण्यक
कठ
तैतिरिय

